याचकं धनिनं दृष्ट्वा वीरं युद्धपराङ्मुखम् ।
दूषकं कुलधर्म्माणां मद्यपाञ्च कुलस्त्रियम् ॥ १६३ ॥
मित्रद्रोहकरं मर्त्त्यं स्वयं पापरतं बुधम् ।
पश्यन् सूर्य्यं स्मरन् विष्णुं सचेलः स्नानमाचरेत् ॥ १६४ ॥
खरकुक्कुटकौलांश्च विक्रीणन्तो द्विजातयः ।
नीचवृत्तिं चरन्तोऽपि शुध्येयुस्त्रिदिनव्रतात् ॥ १६५ ॥
दिनमेकं निराहारो द्वितीयं कणभोजनः ।
अपरन्तु नयेद्‌द्भिस्त्रिदिनव्रतमम्बिके ! ॥ १६६ ॥

शिष्टं क्रियमाणस्य कर्म्मणो निष्फलत्वञ्चाह स्नानमित्यादिना । यत्र प्रोषितवाप्यादिषु स्नानं कुर्वन् नर्वाणां जलैरन्यच्च कर्म कुर्वन् नरो दिनमेकं निराहारः सन् पञ्चामृतास्वादनात् शुध्येत् क्रियमाणं कर्म च वृथा भवेत् ॥ १६२ ॥

अथ दृष्टधनिकयाचकयुद्धपराङ्मुखवीरादिकस्य पुंसः प्रायश्चित्तमाह याचकमित्यादिश्लोकद्वयेन । याचकं भिक्षुकं धनिनं दृष्ट्वा तथा युद्धपराङ्मुखं रणानभिमुखं वीरं शूरं कुलधर्माणां दूषकं जनं कुलस्त्रियञ्च मद्यपां मित्रद्रोहकरं मर्त्त्यं स्वयं पापरतं बुधं पण्डितं च दृष्ट्वा सूर्य्यं पश्यन् विष्णुं स्मरन्नरः सचेलः सवस्त्रस्नानमाचरेत् ॥ १६३ । १६४ ॥

ननु गर्द्दभादीन् विक्रीणतां नीचवृत्तिं च कुर्वतां द्विजातीनां कथं शुद्धिस्तत्राह खरेत्यादिना । खरकुक्कुटकौलान् गर्द्दभचरणायुधसूकरान् विक्रीणन्तो नीचवृत्तिञ्चापि चरन्तः कुर्व्वन्तो द्विजातयो ब्राह्मणास्त्रिदिनव्रतात् शुध्येयुः ॥ १६५ ॥

ननु किं त्रिदिनव्रतमत आह दिनमित्यादिना । निराहारः सन् दिनमेकं नयेत् यापयेत् कणभोजनः सन् द्वितीयं दिनं नयेत् अपरन्तु

गृहेऽनुद्घाटितद्वारेऽनाहूतः प्रविशन्नरः ।
वारितार्थप्रवक्तापि पञ्चाहमशनं त्यजेत् ॥ १६७ ॥
आगच्छतो गुरून् दृष्ट्वा नोत्तिष्ठेद्यो मदान्वितः ।
तथैव कुलशास्त्राणि शुध्येदेकोपवासतः ॥ १६८ ॥
एतस्मिन् शाम्भवे शास्त्रे व्यक्तार्थपदबृंहिते ।
कूटेनार्थं कल्पयन्तः पतिता यान्त्यधोगतिम् ॥ १६९ ॥
इदं ते कथितं देवि ! सारात्सारं परात्परम् ।

तृतीयं दिनन्तु अह्निज्वलनैर्नयेत् । हे अम्बिके ! त्रिदिनव्रतमिदं व्रतम् ॥ १६६ ॥

अथ पिहितद्वारागारेऽनाहूतस्यैव प्रविशतो वारितार्थं कथयतश्च प्रायश्चित्तमाह गृह इत्यादिना । अनुद्घाटितद्वारे रुद्धद्वारे गृहे अनाहूत एव प्रविशन्नरो वारितार्थप्रवक्तापि वारितस्यार्थस्य प्रकथयितापि नरः पञ्चाहमशनं त्यजेत् ॥ १६७ ॥

आगच्छतः पित्रादीन् कुलशास्त्राणि च समीक्ष्यानुत्तिष्ठतः पुंसः प्रायश्चित्तमाह आगच्छत इत्यादिना । आगच्छतो गुरून् पित्रादीन् तथैवागच्छन्ति शास्त्राणि च दृष्ट्वा यो मदान्वितो नोत्तिष्ठेत् स एकोपवासतः शुध्येत् मदान्वित इत्यनेन रोगादिनिमित्तकयाऽशक्त्यानुत्तिष्ठ-तस्तु न दोषभागित्वमिति ध्वनितम् ॥ १६८ ॥

अधुना शम्भुप्रोक्तेऽस्मिन् शास्त्रे शब्दव्याजेनार्थान्तरं कल्पयतां पतितत्वमधोगामित्वञ्चाह एतस्मिन्नित्यादिना । व्यक्तार्थपदबृंहिते विस्पष्टार्थपदवर्द्धिते शाम्भवे शम्भुप्रोक्ते एतस्मिन् शास्त्रे कूटेन शब्दव्याजेनार्थं कल्पयन्तो नराः पतिताः सन्तोऽधोगतिं यान्ति । मायानिश्चलयन्त्रेषु कैतवाङ्कतराशिषु । अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रि-यामित्यमरः ॥ १६९ ॥

इहामुत्रार्थदं धर्म्म्यं पावनं हितकारकम् ॥ १७० ॥

इति श्रीमहानिर्वाणतन्त्रे सर्व्वतन्त्रोत्तमोत्तमे सर्वधर्मनिर्णय-
सारे श्रीमदाद्यासदाशिवसंवादे स्वपरानिष्ट-
जनकपापप्रायश्चित्तकथनं
नाम एकादशोल्लासः ।

प्रकरणार्थमुपसंहरन्नाह इदमित्यादिना । हे देवि ! सारात्सारं न्याय्यादपि न्याय्यं परात्परमुत्तमादप्युत्तमं इहामुत्रार्थदमिहलोके परलोके च फलदं धर्म्म्यं धर्म्मादनपेतं पावनं पवित्रताकारकं हितकारकमिदं ते तुभ्यं कथितम् । सारो बले स्थिरांशे च न्याय्ये क्लीवं वरे त्रिष्वित्यमरः । अर्थोऽभिधेयरैवस्तु प्रयोजननिवृत्तिष्वित्यमरः ॥ १७० ॥

इति श्रीमहानिर्व्वाणतन्त्रटीकायामेकादशोल्लासः ।

## अथ द्वादशोल्लासः ।

श्रीसदाशिव उवाच ।

भूयस्ते कथयाम्याद्ये ! व्यवहारान् सनातनान् ।
यान् धन् प्रविदन्राजा स्वच्छन्दं पालयेत् प्रजाः ॥ १ ॥

इदानीं लोकशुभाकाङ्क्षया परमकारुणिको महादेवः सनातनव्यवहारान् पार्व्वतीं प्रति पुनः कथयितुमारभते भूय इत्यादिना । हे आद्ये ! ते तुभ्यं तवार्थे वा तोन् सनातनान् शाश्वतान् व्यवहारान् भूयः पुनरहं कथयामि यान् व्यवहारान् रक्षन् पालयन् प्रविदन् प्रजानन् राजा स्वच्छन्दं स्वैरं प्रजाः पालयेद्रक्षेत् ॥ १ ॥

नियमेन विना राज्ञो मानवा धनलोलुपाः ।
मिथस्ते विवदिष्यन्ति गुरुस्वजनबन्धुभिः ॥ २ ॥
व्यतिघ्नन्ति तदा देवि ! स्वार्थिनो वित्तहेतवे ।
पापाश्रया भविष्यन्ति हिंसया च जिहीर्षया ॥ ३ ॥
अतस्तेषां हितार्थाय नियमो धर्म्मसम्मतः ।
नियोज्यते यमाश्रित्य न भ्रश्येयुः शुभान्नराः ॥ ४ ॥
दण्डयेत् पापिनो राजा यथा पापापनुत्तये ।
तथैव विभजेद्दायान् नृणां सम्बन्धभेदतः ॥ ५ ॥
सम्बन्धो द्विविधो ज्ञेयो विवाहाज्जन्मनस्तथा ।

महीपतेर्नियमस्याभावाद्द्रव्याभिलाषिणो मनुजाः पित्रादिभिः सार्द्धं मिथो विवादादिकं करिष्यन्ति तन्निराकरणाय लोकहिताकाङ्क्षः महाशिवो नियमं विदधातीत्येवाह नियमेनेत्यादिना शुभान्नराः इत्यन्तेन श्लोकत्रयेण । हे देवि ! यतो राज्ञो नृपस्य नियमेन विना धनलोलुपाः वित्तविषयकलोलुपास्तत्तस्ते मानवा मनुष्या गुरुस्वजन-बन्धुभिः साकं मिथो विवदिष्यन्ति तथा तदा नियमाभावे स्वार्थिनो धनार्थिनस्ते वित्तहेतवे धनार्थं व्यतिघ्नन्ति परस्परं हनिष्यन्ति जिहीर्षया वित्तहरणेच्छया हिंसया च पापाश्रया भविष्यन्ति अतस्तेषां मानवानां हितार्थाय धर्म्मसम्मतः स नियमो मया नियोज्यते प्रवर्त्त्यते यं नियममाश्रित्य नराः शुभाद्धर्म्माद्‌ भ्रश्येयुर्न पतेयुः व्यतिघ्नन्तीत्यत्र वर्त्तमानसामीप्ये वर्त्तमानवद्वेति भविष्यति लट् ॥ २ । ३ । ४ ॥

ननु यन्नियमाश्रयणान्मनुष्या भद्रान्न भ्रश्येयुः कोऽसौ नियमस्तमाह दण्डयेदित्यादिना । यथा राजा नराधिपः पापापनुत्तये किञ्चिद्धनादाय पापिनो जनान् दण्डयेत्तथैव नृणां मनुष्याणां सम्बन्धभेदतो दायान् विभवान् विभजेत् विभक्तान् कुर्य्यात् । दायो दाने धने पुंसि कार्य्यविक्रस्तु दातरि ॥ ५ ॥

अथोद्वाहजन्मभ्यां दायविभागोपयोगिनः सम्बन्धस्य द्वैविध्यं

यथा स्वकृतपापेन निरयं यान्ति मानवाः ।
ऋणेनापि तथा बद्धः स्वयमेव न चापरः ॥ १३ ॥
साधारणं धनं यच्च स्थावरं स्थावरेतरम् ।
अंशिनः प्राप्तुमर्हन्ति स्वं स्वमंशं विभागतः ॥ १४ ॥
अंशिनां सम्मतावेव विभागः परिसिद्ध्यति ।
तेषामसम्मतौ राजा समदृष्ट्यांशमाचरेत् ॥ १५ ॥
स्थावरस्य चरस्यापि विभागानर्हवस्तुनः ।
मूल्यं वा तदुपसत्वमंशिनां विभजेन्नृपः ॥१६ ॥

नरा यदि गृह्णीयुस्तदा तेभ्यो नरेभ्यस्तत् पैतृकं धनमाहृत्य गृहीत्वा नृपो राजा पितृणां तातसम्बन्धिनामृणं तैर्दापयेत् ॥ १२ ॥

ऋणापनयने ऋणग्रहीतुरेव सदृष्टान्तं तद्दोषभागित्वमाह यथेत्यादिना । यथा स्वकृतपापेन मानवा नरा निरयं नरकं यान्ति तथा ऋणेनापि स्वयमेव बद्धो भवति न चापरस्तदन्यः कश्चन बद्धो भवेत् ॥ १३ ॥

सामान्ये स्थावरे जङ्गमे च द्रव्ये सर्वेषामेव दायादानां तुल्यांशग्राहकत्वमित्याह साधारणमित्यादिना । स्थावरं स्थावरेतरं जङ्गमं च यत् साधारणं सामान्यं तत्र विभागतः सर्वेऽंशिनः स्वं स्वमंशं प्राप्तुं लब्धुमर्हन्ति योग्या भवन्ति ॥ १४ ॥

सर्वेषामंशिकानां मिथः सम्मतौ सत्यामेव विभागस्य संसिद्धिः स्यादित्याह अंशिनामित्याद्यर्द्धेन । अंशिनां भागग्राहकाणां सम्मतावेव सत्यां विभागः परिसिद्ध्यति निष्पद्यते न त्वन्यथा । ननु पैतृकद्रव्यविभागे सर्वेषां दायादानां सम्मतेरभावे कथं विभागो भवेत्तत्राह तेषामित्यादिना । तेषामंशिनामसम्मतौ सत्यां राजा समदृष्ट्या तुल्यदृष्ट्या अंशं भागमाचरेत् कुर्यात् ॥ १५ ॥

ननु विभागायोग्यस्य स्थावरादेर्वस्तुनः कथं विभागः स्यादत आह स्थावरस्येत्यादिना । स्थावरस्य चरस्य जङ्गमस्यापि विभागान-

विभक्तेऽपि धने यस्तु स्वीयांशं प्रतिपादयेत् ।
पुनर्विभज्य तद्द्रव्यमप्राप्तांशाय दापयेत् ॥ १७ ॥
कृते विभागे द्रव्याणामंशिनां सम्मतौ शिवे ! ।
पुनर्विवादयंस्तत्र शास्यो भवति भूभृतः ॥ १८ ॥
स्थिते प्रेतस्य पौत्रे च भार्य्यायाञ्च पितर्य्यपि ।
पौत्र एव धनार्हः स्याद्धस्ताज्जन्मगौरवात् ॥ १९ ॥

ईवस्तुनो विभाजनायोग्यस्य पदार्थस्य मूल्यमथवा तदुपस्वत्वं तदतिरिक्तं तत्र एवोपजातं द्रव्यं नृपो राजा अंशिनां दायादानां विभजेत् तेभ्यो दापयितुं विभक्तं कुर्य्यात् । अंशिनामिति सम्प्रदानस्य शेषत्वेन विवक्षितत्वात् षष्ठी शेषे इति षष्ठी ॥ १६ ॥

अथांशिभिर्विभज्य गृहीतेष्वपि द्रव्येषु स्वकीयं भागं साक्षिभिर्न्नपलाप्य ज्ञापयते मानवाय राजा पुनस्तानि द्रव्याणि विभज्य तैर्द्दापयेदित्याह विभक्तेऽपीत्यादिना । विभक्तेऽपि वण्टितेऽपि धने यस्तु मनुष्यः स्वीयांशमात्मीयं भागं प्रतिपादयेत्, पश्चात् साक्षिभिर्वोधयेत् तस्मै अप्राप्तांशाय मनुष्याय पुनस्तत् द्रव्यं विभज्य नृपो दायादैर्द्दापयेत् ॥ १७ ॥

सर्व्वेषां दायानां सम्मतौ सत्यां द्रव्यविभागे जाते पुनस्तत्र विवादं कुर्व्वन्नरो महीपालेन शासनीयो भवेदित्याह कृत इत्यादिना । हे शिवे ! अंशिनां सम्मतौ सत्यां द्रव्याणां विभागे कृते सति पुनस्तत्र द्रव्यविभागे विवादयन् विवादं कुर्व्वन्नरो भूभृतो राज्ञः शास्यः शासनीयो भवति ॥ १८ ॥

ननु प्रमीतस्य मानवस्य विद्यमानानां तातभार्य्यापौत्राणां मध्ये कस्य तद्धनभागित्वमत आह स्थिते इत्यादिना । प्रेतस्य मृतस्य मनुष्यस्य पौत्रे पितरि चापि स्थिते भार्य्यायां च स्थितायामधस्ताज्जन्म येषां तेषां गौरवाद्गुरुत्वाद्धेतोः पौत्र एव धनार्हो धनयोग्यः स्यात् ॥ १९ ॥

तत्रौद्वाहिकसम्बन्धादपरो बलवत्तरः ॥ ६ ॥
दायेतूर्ध्वतनाज्ज्यायान् सम्बन्धोऽधस्तनः शिवे ! ।
अध-ऊर्ध्वक्रमादत्र पुमान् मुख्यतरः स्मृतः ॥ ७ ॥
तत्रापि सन्निकर्षेण सम्बन्धो दायमर्हति ।
अनेन विधिना धीरा विभजेयुः क्रमाद्धनम् ॥ ८ ॥
मृतस्य पुत्रे पौत्रे च कन्यासु पितरि स्थिते ।
भार्य्यायामपि दायार्हः पुत्र एव न चापरः ॥ ९ ॥

भाषमाणो महादेवस्तत्र वैवाहिकसम्बन्धतो जननसम्बन्धस्य प्राबल्यं प्रतिपादयति सम्बन्ध इत्यादिना । विवाहात्तथा जन्मनः उत्पत्तेः सम्बन्धो द्विविधो द्विप्रकारको ज्ञेयो बोद्धव्यः। तत्र तयोः सम्बन्धयोरौद्वाहिकसम्बन्धादपरो जननसम्बन्धो बलवत्तरो ज्ञेयः ॥ ६ ॥

दायहरणे ऊर्द्ध्वतनसम्बन्धतोऽधोभवस्यैव सम्बन्धस्य ज्येष्ठत्वमध-ऊर्द्ध्वक्रमतो योषिद्भ्यः पुरुषस्यैव प्रधानतरत्वं चाह दाये त्वित्यादिना । हे शिवे ! दाये तु धने तूर्द्ध्वतनादूर्द्ध्वभवात् सम्बन्धादधस्तनोऽधोभवः सम्बन्धो ज्यायान् श्रेष्ठः स्मृतः तुशब्देनाभिवादनादावधस्तनात् सम्बन्धादूर्द्ध्वतनस्यैव सम्बन्धस्य ज्यायस्त्वमिति ध्वनितम् । अत्र दायहरणेऽध-ऊर्द्ध्वक्रमात् स्त्रीतः पुमान् पुरुषो मुख्यतरः प्रधानतरः स्मृतः ॥ ७ ॥

नन्वासन्नानासन्नयोर्म्मध्ये कतरस्य दायार्हत्वं स्यात् तत्राह तत्रापीति । तत्रापि मुख्यतरेषु पुंस्वपि सन्निकर्षेण सान्निध्येन सम्बन्धो दायमर्हति धनार्हो भवति अनेन पूर्व्वोक्तेन विधिना धीरा मनीषिणो धनं क्रमाद्विभजेयुर्व्वण्टयेयुः ॥ ८ ॥

ननु प्राप्तपञ्चत्वस्य पुंसो विद्यमानानां पत्नीकन्यानां ताततनयपौत्राणाञ्च मध्ये कतमस्य तद्धनग्राहकत्वमत आह मृतस्येत्यादिना । मृतस्य मानवस्य पुत्रे पौत्रे पितरि च स्थिते कन्यास्वात्मजासु च स्थितासु भार्य्यायां पत्न्यामपि स्थितायां सन्निकृष्टत्वात् पुंस्त्वेन मुख्यतरत्वादधोभवत्वेन ज्यायस्त्वाच्च पुत्र एव [illegible] दायार्हः [illegible] चापरः

बहवस्तनया यत्र सर्व्वे तत्र समांशिनः ।
ज्येष्ठे राज्याधिकारित्वं तत्तु वंशानुसारतः ॥ १० ॥
ऋणं यत् पैतृकं तच्च शोधयेत् पैतृकैर्धनैः ।
तस्मिन् स्थिते विभागार्हं न भवेत् पैतृकं वसु ॥ ११ ॥
विभज्य यदि गृह्णीयुर्विभवं पैतृकं नराः ।
तेभ्यस्तद्धनमाहृत्य पितॄणां दापयेन्नृपः ॥ १२ ॥

स्त्रियः पौत्रादिद्दयार्हाः पौत्रस्य पुत्रतो विप्रकृष्टत्वात् भार्य्यायाः कन्यानां च स्त्रीत्वेनाप्रधानत्वात् पितृशोर्द्धं भवत्वेनाजत्रायस्वाद्दायार्हत्वं नेत्यर्थः ॥ ९ ॥

ननु बहुपुत्रस्य प्रमीतस्य पृथ्वीपतेः स्थावरं स्थावरेतरद्रव्येषु सर्वेषामात्मजानां समांशहारित्वं न्यूनाधिकांशहारित्वं वेत्यत आह बहव इत्यादिना । राज्ञो यत्र स्थावरे जङ्गमे वापि द्रव्ये बहवः तनयाः पुत्रा भागार्हास्तत्र सर्वे समांशिनस्तुल्यभागिनः स्युर्न तु न्यूनाधिकांशिन इत्यर्थः । ननु महीपतेर्ज्येष्ठ एवात्मजो प्रायशो राज्याधिकारित्वं श्रूयते दृश्यते च तत् कथमुच्यते सर्वे तत्र समांशिन इत्यत आह ज्येष्ठे राज्ञः पुत्रे यद्राज्याधिकारित्वं तत्तु वंशानुसारतो ज्ञेयम् । वंशे यदि ज्येष्ठ एव राजपुत्रो राज्यं लभमानो भवेत्तदा तस्मिन्नेव राज्याधिकारित्वम् । अन्येषां ग्रासाच्छादनभाजनत्वम्, अन्यथा तु पृथ्व्यादिकं सकलं द्रविणं विभज्य सर्वे गृह्णीयुरिति भावः ॥ १० ॥

पैतृकऋणं दत्त्वाऽवशिष्टं पितृद्रव्यं भ्रातृभिर्विभक्तव्यमित्याह ऋणमित्यादिना । पैतृकं पितृसम्बन्धि यदृणं तत् पैतृकैः पितृसम्बन्धिभिर्धनैः शोधयेत् तस्मिन्नृणे स्थिते सति पैतृकं वसु धनं विभागार्हं वण्टनयोग्यं न भवेत् ॥ ११ ॥

पैतृकऋणमशोधयित्वैव विभज्य गृहीततातद्रव्येभ्यो नरोधिपऋणं दापयेदित्याह विभज्येत्यादिना । पैतृकं विभवं धनं विभज्य

अपुत्रस्य स्थिते ताते सोदरे च पितामहे ।
जन्मतः सन्निकर्षेण पितैवास्य धनं हरेत् ॥ २० ॥
विद्यमानासु कन्यासु सन्निकृष्टास्वपि प्रिये ! ।
मृतस्य पौत्रो धनभाक् यतो मुख्यतरः पुमान् ॥ २१ ॥
धनं मृतेन पुत्रेण पौत्रं याति पितामहात् ।
अतोऽत्र गीयते लोकैः पुत्ररूपः स्वयं पिता ॥ २२ ॥
औद्वाहिकेऽपि सम्बन्धे ब्राह्मी भार्य्या वरीयसी ।
अपुत्रस्य हरेद्रिक्थं पत्युर्द्देहार्द्धहारिणी ॥ २३ ।

नन्वपुत्रस्य मृतस्य पुंसो वर्त्तमानानां जनकपितामहसमानोदर्य्याणां मध्ये कतमस्य तद्वित्तहारित्वमत आह अपुत्रस्येत्यादिना । अपुत्रस्य मृतस्य जनस्य ताते पितरि सोदरे भ्रातरि पितामहे च स्थिते सति जन्मतः सन्निकर्षेण सान्निध्येन हेतुनाऽस्याऽपुत्रस्य धनं पितैव हरेत् गृह्णीयात् ॥ २० ॥

स्वर्य्यातुरपुत्रस्यासन्नतरास्वपि कन्यासु स्थितासु पुंसः प्रधानतरत्वात् पौत्रस्यैव धनभागित्वमित्याह विद्यमानास्वित्यादिना । हे प्रिये ! मृतस्य पुरुषस्य विद्यमानासु सन्निकृष्टास्वासन्नास्वपि कन्यासु यतः पुमान् पुरुषो मुख्यतरः प्रधानतरो भवेदतः पौत्र एव धनभाग् भवेत् ॥ २१ ॥

अधुना पितुरेव सहेतुकं पुत्ररूपत्वं व्याहरन् पुत्रहीनस्य मृतस्य पुंसः पौत्रस्यैव धनाधिकारित्वमनुवदति धनमित्यादिना । यतो धनं पितामहात् सकाशान्मृतेन पुत्रेण पौत्रं याति गच्छति अतोऽत्र संसारे लोकैर्जनैः पिता स्वयं पुत्ररूप इति गीयते गद्यते ॥ २२ ॥

इदानीं ब्राह्मशैव्योर्भार्य्ययोर्मध्ये ब्राह्मयेवातिश्रेष्ठा पुत्ररहितस्य मृतस्य पत्युर्वित्तस्य ग्राहिका चेत्याह औद्वाहिकेऽपीत्यादिना । औद्वाहिकेऽपि विवाहनिमित्तकेऽपि सम्बन्धे ब्राह्मी वेदोक्तविधिना परिणीता भार्य्या शैव्यभार्य्याया वरीयसीतिवरा भवेत् पत्युः स्वामिनो

पतिपुत्रविहीना तु सम्प्राप्य स्वामिनो धनम् ।
नैव दातुं न विक्रेतुं समर्था स्वधनं विना ॥ २४ ॥
पितृभिः श्वशुरैर्व्वापि दत्तं यद्धर्म्मसम्मतम् ।
स्वकृत्योपार्ज्जितं यच्च स्त्रीधनं तत् प्रकीर्त्तितम् ॥ २५ ॥
तस्यां मृतायां तद्रिक्थं तत् पुनः स्वामिपदं व्रजेत् ।
तदासन्ननरो रिक्थमध ऊर्द्ध्वक्रमाद्धरेत् ॥ २६ ॥
मृते पत्यौ स्वधर्म्मेण पतिबन्धुवशे स्थिता ।
तदभावे पितृबन्धोस्तिष्ठन्ती दायमर्हति ॥ २७ ॥

यतो देहार्द्धहारिणी स्याद्तो भार्य्येव भार्य्याऽपुत्त्रस्य पुत्त्रहीनस्य मृतस्य पत्युर्रिक्थस्तद्रिक्थं धनं वक्ष्यमाणन्वरः ॥ २३ ॥

अथ स्वामिपुत्त्राभ्यां रहिता स्त्री लब्धधनं स्थिता सती तद्दानविक्रयौ कर्त्तुं न शक्नोतीत्याह पतिपुत्त्रेत्यादिना । पतिपुत्त्रविहीना स्त्री स्वामिनो धनं सम्प्राप्य लब्ध्वा नैव तद्दातुं न च विक्रेतुं समर्था शक्ता भवेत् । परन्तु स्वधनं विना, स्वकीयं तु धनं दातुं विक्रेतुं शक्नोतीत्यर्थः ॥ २४ ॥

ननु किं नाम स्त्रीधनमत आह पितृभिरित्यादिना । बहुवचनस्य बहूपलक्षकत्वात् पितृभिर्ज्जनकादिभिः श्वशुरैः पतिपित्रादिभिर्व्वा धर्म्मसम्मतं यद्धनं दत्तं यच्च स्वकृत्या स्वीयया शिल्पादिक्रिययोपार्ज्जितं तत् स्त्रीधनं प्रकीर्त्तितं कथितम् ॥ २५ ॥

ननु सम्प्राप्तस्वामिवित्ताया योषितो मृतौ सत्यां कस्य तद्वित्तहारितेत्यत आह तस्यामित्यादिना । तस्यां सम्प्राप्तस्वामिधनायां स्त्रियां मृतायां सत्यां तद्रिक्थं धनं पुनः स्वामिपदं व्रजेद्गच्छेत् स्वामिपदगतं च तद्रिक्थमध-ऊर्द्ध्वक्रमात्तदासन्नतरः स्वामिनोऽन्तिमसन्निकृष्टो जनो हरेत् एतत्तु सामान्यत उक्तं विशेषतस्त्वग्रे वक्ष्यते ॥ २६ ॥

भर्त्तुर्मरणे सति भर्त्रादिबान्धववशे स्वधर्म्मेण तिष्ठन्त्येव स्त्री स्वामिनो दायमर्हतीत्याह मृते इत्यादिना । पत्यौ स्वामिनि मृते सति

शङ्कितव्यभिचारापि न पत्युर्दायभागिनी।
लभते जीवनं मात्रं भर्त्तुर्व्विभवहारिणः॥ २८॥
ब्रह्माद्ये ह वनितास्तस्य स्वर्य्यातुर्धर्मतत्पराः।
भजेरन् स्वामिना वित्तं समांशेन शुचिस्मिते!॥ २९॥
पत्युर्धनहारायाश्च मृतौ भर्तृसुतास्थितौ।
पुनः स्वामिपदं गत्वा धनं दुहितरं व्रजेत्॥ ३०॥

पतिबन्धुवंशे स्वधर्मेण स्थिता तदभावे पतिबन्धुभावे पितृबन्धोर्वंशे तिष्ठन्ती स्त्री दायं पत्युर्धनमर्हति॥ २१॥

शङ्कितव्यभिचारा नारी तु ग्रासाच्छादनमात्रभागिनी न तु स्वामिधनभागिनीत्याह शङ्कितेत्यादिना। शङ्कितव्यभिचारापि स्त्री पत्युर्दायभागिनी न भवति किन्तु भर्त्तुर्विभवहारिणः पुत्रात्जीवनं मात्रं जीवनमेव लभते प्राप्नोति। अपीति वदता सदाशिवेन प्रकटितव्यभिचारायाः नार्य्या नितरामेव भर्त्तृदायभाजनत्वं नेति सूचितम्। जीव्यते येनान्नादिना तज्जीवनम् करणाधिकरणयोश्चेति करणे ल्युट्। मात्रं कार्त्स्न्येऽवधारणे इत्यमरः॥ २८॥

प्रेतस्य धर्मपरायणाः बह्व्यो भार्य्याश्चेत् सर्वाः स्वामिनो द्रव्यं विभज्य गृह्णीयुरित्याह बह्व्य इत्यादिना। हे शुचिस्मिते! शुभ्रे ब्रह्मासे पवित्रे ब्रह्मासे वा तस्य स्वर्य्यातुः स्वर्गं गमिनः पुंसो धर्मतत्पराः पुण्यपरायणाश्चेद्यदि बह्व्यो वनिताः स्त्रियः स्युस्तदा सर्वास्ताः स्वामिनो वित्तं समांशेन तुल्यभागेन भजेरन् सेवेरन॥ २९॥

लब्धभर्त्तृवित्ताया वनिताया मरणे सति तद्धनं पुनस्तत्स्वामिनं प्राप्य ततश्च तत्तनयां गच्छेदित्याह पत्युरित्यादिना। पत्युर्धनहरायाः स्वामिनो वित्तहारिण्याः स्त्रियाः मृतौ भर्त्तृसुतायाः स्थितौ च सत्यां धनं पुनस्तत्स्वामिपदं गत्वा दुहितरं तत्सुतां व्रजेद्गच्छेत् भर्त्तृसुतेति व्याहरन्नाद्यादेः क्रीतादिसुतां तत्सुतां न गच्छेदिति सूचयाञ्चक्रे॥ ३०॥

एवं स्थितायां कन्यायामकृथं पुत्त्रवधूगतम् ।
तन्मृतौ स्वामिनं प्राप्य श्वशुरात्तत्सुतामियात् ॥ ३१ ॥
तथा पितामहे सत्त्वे वित्तं मातृगतं शिवे ! ।
तस्यां मृतायां पुत्त्रेण भर्त्रा श्वशुरगम्भवेत् ॥ ३२ ॥
मृतस्योर्ध्वगतं वित्तं यथा प्राप्नोति तत्पिता ।
जनन्यपि तथाप्नोति पतिहीना भवेद्यदि ॥ ३३ ।
अतः सत्यां जनन्यां तु विमाता न धनं हरेत् ।
मृते जनन्यास्तं प्राप्य पिता गच्छेद्विमातरम् ॥ ३४ ॥

स्वहीनपतिद्रव्याया नार्य्या मृतौ सत्यां तत् द्रव्यं भर्तृगतं ततः श्वशुरगतं च सत् श्वशुरकन्यां यायादित्याह एवमित्यादिना । एवमनेन प्रकारेण कन्यायां स्थितायां सत्यां पुत्त्रवधूगतमकृथं धनं तन्मृते पुत्त्रवधूमरणे सति स्वामिनं तद्भर्त्तारं प्राप्य ततश्च श्वशुरं प्राप्य श्वशुरात्तु तत्सुतां श्वशुरतनयामियाद्गच्छेत् । तन्मृते इत्यत्र नपुंसके भावे क्त इति सूत्रेण भावे क्त प्रत्ययः । एतच्च भर्त्तृदुहित्रादिश्यालीयपर्य्यन्ताभावे बोद्धव्यम् ॥ ३१ ॥

ननु प्राप्तपुत्त्रवित्ताया मातुर्मरणे सति कस्य तद्वित्तभागितेत्यत आह तथेत्यादिना । हे शिवे ! तथा तेनैव प्रकारेण पितामहे सत्त्वे वर्त्तमाने मातृगतं जननीप्राप्तं वित्तं धनं तस्यां मातरि मृतायां सत्यां पुत्त्रेणात्मजेन भर्त्रा पत्या च श्वशुरगं भवेत् श्वशुरं गच्छेदित्यर्थः । सर्व्वेत्र सत्त्वमिति स्वार्थिकस्त्वः इदं पुत्त्रस्य सोदरायां तत्पुत्त्राणाञ्चाभावे बोध्यम् ॥ ३२ ॥

पुत्त्रादिप्रपौत्रपर्य्यन्तरहितस्य प्राप्तपञ्चत्वस्य पुंसो जनकस्य जनन्या अपि दुहितृवत्स्वत्वं तन्मृतौ च तस्य विमातुरपीत्याह मृतस्येत्यादिद्वयेन । मृतस्य जनस्योर्द्धगतमूर्द्धं प्राप्तं वित्तं तत्पिता मृतस्य जनको यथाप्नोति लभते तथैव यदि पतिहीना स्वामिरहिता भवेद् तदा तज्जनन्यप्याप्नोति ॥ ३३ ॥

अधस्तनानां विरहाद्यथा रिक्थं न यात्यधः।
तेनैवाधस्तनं प्राप्तं तेनैवोर्द्धं तदा व्रजेत् ॥ ३५ ॥
अतः स्थितौ पितृव्यस्य धनं स्वसृगतञ्च यत्।
पत्यौ स्थितेऽनपत्याया मृतौ पितृव्यमाश्रयेत् ॥ ३६ ॥
ऊर्द्धादित्तमधः प्राप्य पुमांसमवलम्बते।
अतः सत्यां सोदरायां वैमात्रेया धनं हरेत् ॥ ३७ ॥
स्थितायां सोदरायाञ्च विमातुः पक्षसम्मतौ।
वैम [illegible] गतं वित्तं वैमात्रेयान्वयी भजेत् ॥ ३८ ॥

अत इति। अतो जनन्यास्तु सत्यां विमाता तस्य धनं न हरेत् किन्तु मातैव [illegible] जनन्या मृते मरणे तु तद्धनं पुत्र प्राय पिता विमातरं [illegible] ॥ ३४ ॥

अधो [illegible] गच्छता वित्त योर्द्ध-गामित्वेन [illegible] या [illegible]याः पतिवत्ना: स्वसुर्मृतौ सत्यां तद्धन [illegible] पितृव्याश्रयत्वं स्यादित्याह अधस्तनानामित्या-दिद्वयेन। अधस्तनानामभावे जनं धनं प्राप्तं तेनैव जनेनोर्द्ध व्रजेदच्छेत् ॥ ३५ ॥

अत इति। अतोऽधस्तनानां विरहादृक्थस्योर्द्ध गामित्वादेव पितृव्यस्थि [illegible] याः पुत्रेण पुत्र्या च रहितायाः स्वसुर्मृतौ च सत्यां पत्यौ [illegible] रि स्थितेऽपि स्वसृगतं च यत् धनं पितृव्य-माश्रयेत [illegible] पितादिना च पितृभ्रातरं भजेत्, अनपत्याया इति विशेषणेनापत्यवत्यास्तु मृतौ तद्गतस्य धनस्य तदपत्यगामित्वमेवस्तु-चयत् ॥ ३६ ॥

ऊर्द्धादधःप्राप्तस्य धनस्य पुरुषावलम्बित्वात् सोदरायां विद्यमा-नायामपि वैमात्रेयगामितैव स्यादित्याह ऊर्द्धादित्यादिना। यतो वित्तं धनमूर्द्धादधः प्राप्य पुमांसं पुरुषमवलम्बते आश्रयत्यतः सोदरायां भगिन्यां सत्यामपि वैमात्रेयो विमातृजो धनं हरेत् ॥ ३७ ॥

मृतस्य सोदरो भ्राता वैमात्रेयस्तथा शिवे ।
धनं पितृगतत्वेन विभजेतां समांशिनौ ॥ ३९ ॥
कन्यायां जीवितायाञ्च तदपत्यं न दायभाक् ।
यत्र यद्दाधितं वित्तं तन्मृतावपरं व्रजेत् ॥ ४० ॥
विभजेयुर्दुहितरः पुत्राभावे पितुर्वसु ।
उद्वाहयन्त्योऽनूढास्तु पितुः साधारणैर्धनैः ॥ ४१ ॥

ननु सोदरायां वैमात्रेयसन्ततौ च विद्यमानायां वैमात्रेयमरणे सति तद्धनं वित्तं का प्राप्नुयादित्याह स्थितायामित्यादिना । सोदरायां भगिन्यां विमातुः पुत्रसन्ततौ च स्थितायां सत्यां वैमात्रेयगतं वित्तं ... सति वैमात्रेयाभ्यो विमातृजसन्ततिर्भजेत् सैवेत् ॥ ३८ ॥

पुत्रा ... प्रमीतस्य पुंसः सोदरवैमात्रेययोरुभयोरपि तद्धनं समभागित्वमित्याह मृतस्येत्यादिना । हे शिवे ! मृतस्य जनस्य सोदरो भ्राता तथा वैमात्रेयश्चोभौ तद्धनस्य पितृगतत्वेन हेतुना ... समांशिनौ सन्तौ तद्धनं विभजेतां विभज्य गृह्णीयातामित्यर्थः ॥ ३९ ॥

जीवन्त्यां कन्यायां तदपत्यस्य दायभागित्वं नेत्याह कन्याया-मित्यादिना । कन्यायां जीवितायां सत्यां तदपत्यं दायभाग्भवेत्, किन्तु कन्यैव दायभागिनी स्यादित्यर्थः । यत्र ... वित्तं धनं यद्दाधितं भवत् तन्मृतौ तस्य बाधकजनस्य मरणे सति तद्वित्तं तदपरं जनं व्रजेत् ॥ ४० ॥

अपरिणीतां भगिनीं सामान्यधनादुद्वाहयन्त्यो दुहितरो मृतस्याऽपुत्रस्य पितुर्विषयं सर्वां विभज्य गृह्णीयुरित्याह विभजेयुरित्यादिना । पितुः पुत्राभावे सति पितुः साधारणैः सामान्यधनैरनूढामपरिणीतां पितुः पुत्रीमुद्वाहयन्त्यो दुहितरः पुत्र्यः पितुर्वसु द्रव्यं विभजेयुः । तदुद्वाहेन विवाहमात्रमपि पितृद्रव्यं विभजेयुः ॥ ४१ ॥

अनपत्याया मृतायाश्च स्त्रीधनं स्वामिनं भजेत् ।
अन्यस्तु द्रविणं यस्मादागं तत् पदमाश्रयेत् ॥ ४२ ॥
प्रेतलब्धधनैर्नारी विदध्यादात्मपोषणम् ।
पुण्यन्तु तदुपस्वत्वैर्न शक्ता दानविक्रये ॥ ४३ ॥
पितामहस्नुषायाञ्च सत्यां तातविमातरि ।
पितामहगतं रिक्थं तत् पुत्रेण स्नुषां व्रजेत् ॥ ४४ ॥
पितामहे पितृव्ये च तथा भ्रातरि जीवति ।
अधोभवानां मुख्यत्वात् भ्रातैव धनभाग् भवेत् ॥ ४५ ॥

अनपत्यायाः प्रमीतायाः नार्याः स्त्रीधनस्य तत्स्वामिगामित्वम-परस्य तु तल्लब्धस्य द्रव्यस्य यतः प्राप्तिरासीत्तत्पदाश्रयत्वमित्याह अन-पत्याया इत्यादिना । अपत्यायाः सन्ततिरहितायाः नार्याः स्त्रीधनं तद्भर्तारं भजेत् सेवेत् अन्यस्तु तद्भिन्नन्तु द्रविणं द्रव्यं यस्माज्जनादागतं लब्धं तत्पदमाश्रयेद्भजेत ॥ ४२ ॥

प्रेतस्याप्तानि वित्तानि दातुं विक्रेतुं चाशक्नुवती नारी भरण-पर्य्यन्तं भुञ्जीत तदुपस्वत्वैस्तु धर्ममपि कुर्य्यादित्याह प्रेतेत्यादिना । प्रेतलब्धधनैर्मृतात् प्राप्तैर्वित्तैर्नारी योषिदात्मपोषणमात्मनो भरणं विदध्यात् कुर्य्यात् पुण्यं धर्मं तु तदुपस्वत्वैस्तदतिरिक्तैस्तत एवोपजा-तैर्धनैर्विदध्यात्, तेषां दाने विक्रये च शक्ता समर्था न भवेत् ॥ ४३ ॥

ननु पुत्रादिपितृव्यपर्य्यन्तरहितस्य मृतस्य पुंसो द्रविणस्य तत्-पितृव्यपत्नीगामित्वं तातविमातृगामित्वं वेत्याशङ्कायामाह पिताम-हेत्यादिना । पितामहस्नुषायां पितामहपुत्रभार्य्यायां तातविमातरि च सत्यां विद्यमानायां पितामहगतं रिक्थं धनं तत्पुत्रेण पितामह-स्यात्मजेन स्नुषां पत्नपत्नीं भजेत् ॥ ४४ ॥

ननु पुत्रादिमातृपर्य्यन्तरहितस्य प्रेतस्य पुंसो विद्यमानानां पितामहपितृव्यभ्रातॄणां मध्ये कतमस्य तद्धनभागित्वं तत्राह पिता-मह इत्यादिना श्लोकद्वयेन । पितामहे पितृव्ये तथा भ्रातरि च

पितृव्यात् सन्निकर्षेऽत्र तुल्यौ भ्रातृपितामहौ ।
धनं पितृपदं गत्वा प्रयातुर्भ्रातरं व्रजेत् ॥ ४६ ॥
स्थितेऽप्यपत्ये दुहितुः प्रेतस्य पितरि स्थिते ।
दुहित्रपत्यं धनभाग् धनं यस्मादधोमुखम् ॥ ४७ ॥
स्वःप्रयातुः स्थिते ताते तथा मातरि कालिके ! ।
पुंसो मुख्यतरत्वेन धनहारी भवेत् पिता ॥ ४८ ॥
स्थितः स्वपितृसापिण्ड्यो वर्त्तमानेऽपि मातुले ।
प्रेतस्य धनहारी स्यात् पितुः सम्बन्धगौरवात् ॥ ४९ ॥

जीवति सति अधोभवानां जनानां मुख्यत्वात् प्रधानत्वाद्धेतोर्भ्रातैव धनभाग् भवेत् मृताद् पुत्रात् पितृगतं धनंमृतस्य भ्रातैव भजेदित्यर्थः ॥ ४५ ॥

पितृव्यादिति । अत्र लोके पितृव्यात् सन्निकर्षे सामीप्ये यद्यपि भ्रातृपितामहौ तुल्यौ समानौ भवतस्तथाप्यधोभवानां मुख्यत्वात् स्वः प्रयातुर्ज्जनस्य धनं पितृपदं गत्वा भ्रातरं भजेत् ॥ ४६ ॥

ननु पुत्रादिपुत्रीपर्य्यन्तहीनस्य मृतस्य पुंसो विद्यमानयोस्तात दुहित्रपत्ययोर्मध्ये कतरस्य तद्धनप्राप्तृकत्वमत आह स्थित इत्यादिना । प्रेतस्य मृतस्य जनस्य पितरि स्थिते दुहितुरपत्येऽपि स्थिते सति यस्माद्धनमधोमुखं स्यादतो दुहित्रपत्यमेव धनभाग् भवेत् ॥ ४७ ॥

प्रेतस्य पुंसो जीवतोर्मातापित्रोर्मध्ये पुरुषस्य प्रधानत्वात पितुरेव तद्धनहारित्वमित्याह स्वः प्रयातुरित्यादिना । हे कालिके ! स्वः प्रयातुर्मृतस्य जनस्य ताते पितरि स्थिते सति तथा मातरि स्थितायां सत्यां पुंसो मुख्यतरत्वेन हेतुना पिता धनहारी भवेत् ॥ ४८ ॥

ननु मृतस्य पुंसो विद्यमानयोर्मातुलपितृसपिण्डयोर्मध्ये कतरस्य तद्धनभागित्वमत आह स्थित इत्यादिना । मातुले वर्त्तमानेऽपि पितुः सम्बन्धस्य गौरवाद्धेतोः स्थितः स्वपितृसापिण्ड्यः प्रेतस्य

अधस्ताद्गमनाभावे धनमूर्द्धभवं गतम् ।
तत्रापि पुंसां मुख्यत्वादितं पितृकुलं शिवे ! ।
अतोऽत्र सन्निकृष्टोऽपि मातुलो नाप्नुयाद्धनम् ॥ ५० ॥
अजीवत्पितृकः पौत्रः पितृव्यैः सह पार्वति ! ।
पितामहस्य द्रविणात् स्वपितुर्द्दायमर्हति ॥ ५१ ॥
भ्रातृहीना तथा पौत्री पितृव्यैः समभागिनी ।
पितामहधनं सौम्या हरेच्चेन्मृतमातृका ॥ ५२ ॥
सत्यां पौत्राः पितामह्यां पौत्राः पितृष्वसर्य्यपि ।
वित्ते पितृगते देवि ! पौत्रो तत्राधिकारिणी ॥ ५३ ॥

धनहारी स्यात् सपिण्ड एव सापिण्डः प्रत्यादिभ्यस्वेति स्वार्थेऽण् ॥ ४९ ॥

ननु पितुः सपिण्डात् सन्निकृष्टस्य मातुलस्यैव प्रेतधनहर्त्तृत्वं सम्भवति न तु विप्रकृष्टस्य पितुः सपिण्डस्येतीमामाशङ्कां परिहरन्नाह अधस्तादित्यादिधनमित्यन्तं सार्द्धम् । हे शिवे ! अधस्ताद्गमनाभावे सति प्रेतस्य धनमूर्द्धभवं जनं गतं प्राप्तं भवेत् तत्राप्यूर्द्धभवेष्वपि पुंसां मुख्यत्वाद्धनं पितृकुलमितं प्राप्तं स्यात् अतो हेतोरत्र लोके सन्निकृष्टोऽप्यासन्नोऽपि मातुलः प्रेतस्य धनं नाप्नुयान्न लभेत् ॥ ५० ॥

भ्रातृभ्योऽविभक्तस्य पुरुषस्य मृतौ सत्यां तत्पुत्रः पितृव्यैः सार्द्धं पैतामहकद्रव्यात् पैतृकमंशं प्राप्नुयादित्याह अजीवदित्यादिना । हे पार्वति ! अजीवत्पितृको मृतजनकः पौत्रः पितृव्यैः पितुर्भ्रातृभिः सह पितामहस्य द्रविणात् द्रव्यात् स्वपितुर्द्दायं प्राप्तुमर्हति ॥५१॥

अजीवन्मातृका भ्रातृरहिता पौत्र्यपि पितामहात् द्रव्यात् प्रमीतस्य पितुरंशं प्राप्तुमर्हतीत्याह भ्रातृहीनेत्यादिना । चेद्यदि मृतमातृका भ्रातृहीना सोदरवैमात्रेयरहिता सौम्या व्यभिचारादिदोषहीना च भवेत् तदा तथा तेन प्रकारेण पौत्री पुत्रदुहिता पितृव्यैः समभागिनी सती पितामहधनं हरेत् गृह्णीयात् ॥ ५२ ॥

अधोगामिषु वित्तेषु पुमान् ज्यायानधस्तनः ।
ऊर्द्ध्वगामिधने श्रेष्ठः पुमानूर्द्ध्वोद्भवो भवेत् ॥ ५४ ॥
अतः स्नुषायां पौत्र्याञ्च सत्यां दुहितरि प्रिये ! ।
प्रेतस्य विभवं हर्त्तुं नैव शक्नोति तत्पिता ॥ ५५ ॥
यदा पितृकुले न स्यान्मृतस्य धनभाजनम् ।
पूर्व्वोक्तविधिना रिक्थं मातामहकुलं भजेत् ॥ ५६ ॥
मातामहगतं वित्तं मातुलैस्तत्सुतादिभिः ।

ननु मातृपक्षस्य पुंसो विद्यमानानां जननीभगिनीपुत्रीणां मध्ये तद्वित्ते काधिकारिणी स्यादित्यत आह सत्यामित्यादिना । हे देवि ! पौत्राः पितामह्यां तथा पौत्राः पितृष्वसर्य्यपि सत्यां विद्यमानायामधस्ताज्जन्मगौरवात् पौत्री तत्र पितृगते वित्तेऽधिकारिणी स्यात् ॥ ५३ ॥

ननु प्रेतस्य स्नुषाया दुहितुः पौत्र्याश्च तज्जनकस्य पुंस्त्वेन श्रेष्ठत्वात् प्रेतस्य तस्यैव तद्धनहारित्वं सङ्घटते न तु तत्स्नुषादीनामिति सन्देहं दूरीकुर्व्वन्नाह अधोगामिष्वित्यादिना तत्पितेत्यन्तं श्लोकद्वयम् । अधोगामिषु वित्तेषु धनेष्वधस्तनोऽधोभवः पुमान् ज्यायान् श्रेष्ठो भवेत्तदूर्द्ध्वोद्भवः ऊर्द्ध्वगामिधने तूर्द्ध्वोद्भवः पुमान् श्रेष्ठो भवेत् ॥ ५४ ॥

अत इति । हे प्रिये ! अतोऽधोगामिधने ऊर्द्ध्वोद्भवस्याऽश्रेष्ठत्वाद्धेतोः प्रेतस्य स्नुषायां पुत्रभार्य्यायां पौत्र्यां दुहितरि च सत्यां वर्त्तमानायां प्रेतस्य विभवं धनं हर्त्तुमपहर्त्तुं तत्पिता नैव शक्नोति किन्तु यथाक्रमं ता एव प्रेतधनं हर्त्तुं शक्नुवन्तीत्यर्थः ॥ ५५ ॥

ननु प्रेतपुरुषस्य पितृवंशे धनग्राहकाभावे तद्द्रव्यस्य किं कुलगामित्वं स्यादित्यत आह यदेत्यादिना । यदा मृतस्य जनस्य पितृकुले धनभाजनं धनस्य पात्रं न स्यात्तदा पूर्व्वोक्तविधिना पूर्व्वकथितविधानेन रिक्थं प्रेतस्य धनं मातामहकुलं भजेत् सेवेत् ॥ ५६ ॥

अध-ऊर्द्ध्वक्रमेणैवं पुमांसं स्त्रियमाश्रयेत् ॥ ५७ ॥
ब्राह्मान्वये विद्यमाने पित्रोः सापिण्डने स्थिते ।
मृतस्य शैवी तनयो न पितुर्दायभाग् भवेत् ॥ ५८ ॥
शैवी पत्नी च तत्पुत्रा लभेरन् धनभागिनः ।
ग्रासमाच्छादनं भद्रे ! स्वप्रयातुर्यथा धनम् ॥ ५९ ॥
शैवोद्वाहं प्रकुर्व्वन्तीं शैवभर्त्रैव पालयेत् ।
सौम्याद्वैनाधिकारोऽस्याः पित्रादीनां धने प्रिये! ॥६०॥

मातामहकुलयातस्य द्रव्यस्याध-ऊर्द्ध्वक्रमेणैव पुरुषाश्रयत्वं तदसत्त्वे नार्य्याश्रयत्वं च स्यादित्याह मातामहेत्यादिना । मातामहगतं माता-महं प्राप्तं वित्तं धनं मातुलैस्तत्सुतादिभिर्मातुलपुत्रादिभिश्चाध-ऊर्द्ध्वक्रमेण एवं पितृकुले इव पुमांसं पुरुषं तदभावे स्त्रियमाश्रयेत् सेवेत् ॥ ५७ ॥

अथ प्रेतपुरुषस्य ब्राह्मभार्य्याया अन्वये मातापित्रोः सपिण्डे वा स्थिते शैवापुत्रस्य तद्धनभागित्वं नेत्याह ब्राह्मान्वये इत्यादिना । ब्राह्मान्वये ब्राह्मया भार्य्याया वंशे विद्यमाने पित्रोर्मातुः पितुश्च सापिण्डने सपिण्डे वा स्थिते सति शैवी तनयः शैव्याभार्य्यायाः पुत्रो मृतस्य पितुर्दायभाग् न भवेत्, किन्तु विद्यमानयोस्तयोरेव क्रमतः तद्दायभागित्वमित्यर्थः । एतेन ब्राह्मान्वयस्य मातापित्रोः सपिण्डस्य चाभावे शैवीतनयस्यैव मृतजनकदायभागित्वमिति ध्वनितम् ॥ ५८ ॥

ननु ब्राह्मान्वयस्य पित्रोः सपिण्डस्य वा वर्त्तमानत्वे शैवीपुत्राणां मृतपितृदायभागित्वाभावे कथन्तद्भरणादिनिर्वाहस्तत्राह शैवीत्या-दिना । हे भद्रे ! स्वः प्रयातुः स्वर्गतस्य पुंसः शैवी पत्नी तत्पुत्राः शैव्यास्तनयाश्च तस्य धनभागिनः पुरुषाद्यथा धनं यथा विभवं ग्रासमा-च्छादनं च लभेरन् प्राप्नुयुः ॥ ५९ ॥

ननु शैवमुद्वाहं कुर्वती नारी पित्रादिभिः पालनीया भवेच्छैवेन भर्त्रा वेत्याशङ्कायामाह शैवोद्वाहमित्यादिना । हे प्रिये ! यतोऽस्याः

अतः सत्कुलजां कन्यां शैवैरुद्वाहयन् पिता ।
क्रोधाद्वा लोभतो वापि स भवेल्लोकगर्हितः ॥ ६१ ॥
शैवी तदन्वयाभावे सोदको ब्रह्मदो नृपः ।
हरेयुः क्रमतो वित्तं मृतस्य शिवशासनात् ॥ ६२ ॥
पिण्डदात् सप्तपुरुषाः सपिण्डाः कथिताः प्रिये ! ।
सोदका दशमान्ताः स्युस्ततः केवलगोत्रजाः ॥ ६३ ॥

शैव्याः स्त्रियाः पित्रादीनां धनेऽधिकारो नास्त्यतः शैवोद्वाहं प्रकुर्वन्तीं तां चेद्यदि सौम्यामव्यभिचारिणीं जानीयात्तदा शैवभर्त्तैव पालयेत् रक्षेत् । जानीयादिति त्वध्याहारलभ्यम् । प्रकुर्वन्तीमित्यत्र नुमागमः स्वार्षः ॥ ६० ॥

अथ शैवेन विधिना सत्कुलजां कन्यामुद्वाहयतो जनकस्य लोकनिन्द्यत्वं दर्शयितुमाह अत इत्यादिना । अतो ब्राह्मान्वये मातापित्रोः सपिण्डे वा स्थिते भर्त्तृद्रव्ये स्वपित्रादिद्रव्ये चाधिकारस्याभावाद्धेतोः क्रोधाद्वा लोभतो वापि शैवैर्विधिभिः सत्कुलजां सद्वंशजातां कन्यामुद्वाहयन् यः स पिता लोकगर्हितो लोकनिन्दितो भवेत् ॥६१ ॥

पुत्त्रादिशैवोपर्य्यन्तरहितस्य प्राप्तपञ्चत्वस्य पुरुषस्य स्थावरादिसकलद्रव्येषु सोदकस्य वेदाध्यापकगुरोर्नरपतेश्च क्रमतोऽधिकारित्वमभीत्याह शैवीत्यादिना । शैवी तदन्वयाभावे सति सोदको ब्रह्मदो वेदाध्यापकः गुरुः नृपो राजा च मृतस्य वित्तं धनं शिवशासनात् शिवाज्ञातः क्रमतो हरेयुः यथा शैवी तदन्वयाऽसत्त्वे प्रथमतः सोदको मृतस्य वित्तं हरेत्, तदभावे वेदाध्यापकः तदसत्त्वे तु राजा चेति ॥ ६२ ॥

ननु केषां सपिण्डत्वं केषां सोदकत्वं केवलगोत्रजत्वं च केषामत आह पिण्डादित्यादिना । हे प्रिये ! पिण्डदात् पिण्डदातारं पुरुषमारभ्य सप्तपुरुषाः सपिण्डाः कथिताः तत ऊर्द्धं दशमान्ताः

विभक्तं द्रविणं यत्र संसृष्टं स्वेच्छया तु चेत्।
अविभक्तविधानेन भजेरंस्तद्धनं पुनः॥ ६४॥
अविभक्ते विभक्ते वा यस्य यादृग्विभागिता।
मृतेऽपि तस्य दायादास्तादृग्विभवभागिनः॥ ६५॥
ये यस्य धनहर्त्तारो भवेयुर्जीवनावधि।
दद्युः पिण्डं तएवास्य शैवभार्य्यासुतं विना॥ ६६॥
लोकेऽस्मिन् जन्मसम्बन्धाद् यथाशौचं विधीयते।
धनभागित्वसम्बन्धात् त्रिरात्रं विहितं तथा॥ ६७॥

दशमपुरुषान्ताः षोडकाः स्युः ततः परं केवलगोत्रजा भवेयुः।
पिण्डदादिति ल्यब्लोपे कर्मणीति कर्मणि पञ्चमी॥ ६३॥

विभक्तस्य पश्चात् स्वेच्छया संसृष्टस्य द्रव्यस्याविभक्तविधानेन पुनर्विभागमाह विभक्तमित्यादिना। चेद्यदि विभक्तं यत् द्रविणं द्रव्यं स्वेच्छया संसृष्टं मिश्रीकृतं स्यात्तदा तद्धनं पुनरविभक्तविधानेन दायादा भजेरन्॥ ६४॥

जीवतो यस्य पुरुषस्य विभक्ताऽविभक्ताखिलद्रव्येषु येषां यादृग्विभागित्वं तस्य मरणेऽपि तत्र तेषां तादृग्विभागित्वं स्यादित्याह अविभक्ते इत्यादिना। यस्य पुरुषस्याविभक्ते विभक्ते वा द्रव्ये येषां दायादानां यादृग्विभागिता स्यात्तस्य पुंसो मृतेऽपि मरणेऽपि ते दायादास्तादृग्विभवभागिनो भवेयुः॥ ६५॥

प्रमीतस्य यस्य पुंसो द्रविणं ये लभेरंस्तएव यावज्जीवनं तएव पिण्डं दद्युरित्याह ये इत्यादिना। ये पुमांसो यस्य पुंसो धनहर्त्तारो भवेयुस्तएव जीवनावधि जीवनपर्य्यन्तमस्य पुरुषस्य पिण्डं दद्युः परन्तु शैवभार्य्यासुतं विना तस्य तत्पिण्डदानेऽधिकारो नास्तीत्यर्थः। शैवभार्य्यासुतमिति शैव्यासहदुहित्रादीनां चोपलक्षणम्॥ ६६॥

यथा जन्मसम्बन्धात् सर्वेषां बान्धवानां मरणजननिमित्तकम

पूर्णेऽशौचेऽथवाऽपूर्णे तत्कालाभ्यन्तरे श्रुते ।
श्रवणाच्छेषदिवसैर्विशुद्धेयुर्द्विजातयः ॥ ६८ ॥
कालातीते तु विज्ञाते खण्डेऽशौचं न विद्यते ।
पूर्णे त्रिरात्रं विहितं न चेत् संवत्सरात् परम् ॥ ६९ ॥
वर्षातीतेऽपि चेद्भ्रातुः पितुर्वा मरणश्रुतौ ।
त्रिरात्रमशुचिः पुत्रस्तथा भर्त्तुः पतिव्रता ॥ ७० ॥

शौचं जायते एवं सनाभित्वसम्बन्धाद्भिन्नानामपि त्रिरात्रमशौचं स्यादित्याह लोके इत्यादिना । जन्मसम्बन्धाद्यथाऽस्मिँल्लोके जने मरणजननिमित्तकमशौचं विधीयते तथा सनाभित्वसम्बन्धाद्भिन्नेष्वपि त्रिरात्रमशौचं विहितम् । लोकः स्याद्भुवने जने इत्यमरः ॥ ६७ ॥

स्वस्वाशौचकालाभ्यन्तर एव पूर्णं खण्डं वाऽशौचं शृण्वतामपरदेशस्थानां ब्राह्मणादीनामशौचश्रवणवासरादवशिष्टैरेवाशौचवासरैर्विशुद्धिः स्यात्तद्वासरमारभ्यापरैर्वा दशाहादिभिरित्याशङ्कायामाह पूर्णे इत्यादिना । पूर्णेऽशौचेऽथवाऽपूर्णे खण्डेऽशौचे तत्कालाभ्यन्तरेऽशौचकालमध्ये श्रुते सति श्रवणादशौचश्रवणदिवसाच्छेषदिवसैरवशिष्टैरहोरात्रैर्द्विजादयो ब्राह्मणादयो विशुध्येयुः श्रूयतेऽस्मिन्निति श्रवणं तस्मात् । करणाधिकरणयोश्चेत्यधिकरणे ल्युट् ॥ ६८ ॥

स्वस्वाशौचकालव्यपगमे सति संवत्सराभ्यन्तर एव ज्ञातिमरणं शृण्वन्तो ब्राह्मणादयः कियद्भिरहोरात्रैर्विशुध्येयुरत आह कालातीते इत्यादिना । कालातीते स्वाशौचकालातिक्रमणे तु खण्डेऽशौचे विज्ञाते सत्यशौचं न विद्यते चेद्यदि संवत्सरात्परमूर्द्ध्वं दिनादिकमतीतं न भवेत्तदा अतीतेऽप्यशौचकाले पूर्णेऽशौचे विज्ञाते सति त्रिरात्रमशौचं विहितम् । कालस्यातीतं कालातीतमिति षष्ठीति सूत्रेण षष्ठीतत्पुरुषः । अतीतमित्यत्रातिपूर्वादिणो भावे क्तः । नाशौचं प्रसवस्यास्ति व्यतीतेषु दिनेष्वपीति देवलवचनात् मरणविषयकमिदं वचनम् ॥ ६९ ॥

अशौचाभ्यन्तरे यस्मिन्नशौचान्तरमापतेत् ।
गुर्व्वशौचेन मर्त्त्यानां शुद्धिस्तत्र विधीयते ॥ ७१ ॥
अशौचानां गुरुत्वञ्च कालव्यापित्वगौरवात् ।
व्याप्यव्यापकयोर्मध्ये गरीयो व्यापकं स्मृतम् ॥ ७२ ॥
यद्यशौचान्तदिवसे पतेदपरसूतकम् ।
पूर्व्वाशौचेन शुद्धिः स्याद्व्युष्टायां दिनद्वयम् ॥ ७३ ॥

संवत्सरे व्यतीतेऽपि मातापित्रोर्म्मरणं श्रुत्वा पुत्रस्य स्वामिनो मरणं श्रुत्वा पतिव्रतायाश्च त्रिरात्रमशौचं स्यादित्याह वर्षातीतेऽपीत्यादिना । वर्षातीतेऽपि संवत्सरातिक्रमेऽपि चेद्यदि मातुः पितुर्व्वा मरणश्रुतिः स्यात्तदा तयोर्म्मरणश्रुतौ सत्यां पुत्रः त्रिरात्रमशुचिः स्यात् तथा भर्त्तुः स्वामिनो मरणश्रुतौ पतिव्रता स्त्री त्रिरात्रमशुचिः स्यात् ॥ ७० ॥

एकाशौचे सति तन्मध्यवासराऽसमाप्तावेव विषमकालव्यापकाशौचान्तरनिपाते सत्यधिकदिनव्यापकेनाशौचेन मर्त्त्यानां शुद्धिः स्यादित्याह अशौचाभ्यन्तर इत्यादिना । यस्मिन्नशौचे अशौचाभ्यन्तरेऽशौचमध्येऽशौचान्तरं विषमकालव्यापकमपरमशौचमापतेदागच्छेत्तस्मिन्नशौचे जाते सति गुर्व्वशौचेनाधिकदिनव्यापकेनाशौचेनापगतेन मर्त्त्यानां शुद्धिर्व्विधीयते ॥ ७१ ॥

अथाशौचानां गुरुत्वं निरूपयति अशौचानामित्यादिना । कालव्यापित्वगौरवात् कालव्यापकत्वे गुरुत्वात्तेषामशौचानां गुरुत्वं भवेत्, अधिककालव्यापकत्वादशौचानां गुरुत्वमल्पकालव्यापकत्वाच्च लघुत्वमित्यर्थः । व्याप्यव्यापकयोरशौचयोर्म्मध्ये व्यापकमशौचं गरीयो गुरुतरं स्मृतम् ॥ ७२ ॥

अशौचान्तदिनेऽपरस्मिन्नशौचे सति तु पूर्व्वाशौचेनैव शुद्धिः स्यात् पराशौचेन नेत्याशङ्कायामाह यदीत्यादिना । अशौचान्तदिवसे

स्वगोत्रनामान्युल्लिख्य संस्कुर्य्यात् स्वजनैः सह ॥ ७६ ॥
औरसेऽपि यथा पित्रोर्धने पिण्डेऽधिकारिता ।
आदात्रोर्दत्तके तद्वद्यतोऽस्य पितरौ हि तौ ॥ ७७॥
आपञ्चाब्दं शिशुं गृह्णन् सवर्णात् परिपालयेत् ।
पञ्चवर्षाधिको बालो दत्तको न प्रशस्यते ॥ ७८ ॥
भ्रातृपुत्रोऽपि दत्तश्चेद् गृहीतैव भवेत् पिता ।
उत्पादकः पितृव्यः स्यात् सर्वकर्मसु कालिके ! ॥ ७९॥

इदानीं मातापित्रोः सम्मत्या पुत्रमादाय गृहीत्वा स्वगोत्रनामान्युच्चार्य्य तत्संस्कारो विधेय इत्याह सुतमित्यादिना । जनन्या जनयित्या जनकस्योत्पादकस्य च सम्मत्या सुतं तत्पुत्रमादाय गृहीत्वा स्वगोत्रनामान्युल्लिख्यात्मगोत्रनामधेयान्युच्चार्य्य ग्रहीता स्वजनैर्बान्धवैः सह संस्कुर्य्यात् ॥ ७६ ॥

आदात्रोर्मातापित्रोर्धने पिण्डे च दत्तकपुत्रस्य सदृष्टान्तमधिकारित्वमाह औरसेऽपीत्यादिना । अपिशब्दः पिण्डेन योजनीयः । पित्रोर्धने पिण्डेऽपि यथौरसे पुत्रेऽधिकारिता वर्त्तते तद्वदादात्रोरपि धने पिण्डे च दत्तकेऽधिकारिता स्यात् । दत्तकस्यादात्रोः पिण्डादावधिकारे हेतुं दर्शयन्नाह यत इत्यादिना । यतोऽस्य दत्तकस्य तावादातारौ हीति निश्चितौ पितरौ स्यातामतस्तद्धनपिण्डयोस्तस्याधिकारितेत्यर्थः ॥ ७७ ॥

ननु कियद्वायनो बालो दत्तकः प्रशस्तोऽत आह आपञ्चाब्दमित्यादिना । सवर्णात् समानवर्णादापञ्चाब्दं पञ्चाब्दपर्य्यन्तं शिशुं बालं गृह्णन् ब्राह्मणादिः परिपालयेद्रक्षेत् पञ्चाब्दा वर्षाणि यस्य सपञ्चाब्दस्तस्मादा इत्यापञ्चाब्दम् । आङ्मर्य्यादाभिविध्योरित्यव्ययीभावः । पञ्चवर्षाधिको यो बालो असौ दत्तको न प्रशस्यते ॥ ७८ ॥

दत्तस्य भ्रातुष्पुत्रस्यापादाता तत्पितृव्य एव पिता स्यात्तज्जनकस्तु तत्पितृव्यः स्यादित्याह भ्रातृपुत्रोऽपीत्यादिना । हे कालिके !

यो यस्य धनहर्त्ता स्यात् स तद्धर्म्माणि पालयेत् ।
संरक्षेन्नियमान् तस्य तद्बन्धून् परितोषयेत् ॥ ८० ॥
कानीना गोलकाः कुण्डाः अतिपातकिनश्च ये ।
नाशौचं मरणे तेषां नैव दायाधिकारिता ॥ ८१ ॥
लिङ्गच्छेदो दमो येषां यासां नासानिकृन्तनम् ।
महापातकिनाञ्चापि मृतौ नाशौचमाचरेत् ॥ ८२ ॥
नृणामुद्दिष्टहीनानां परिवारान् धनान्यपि ।
पालयेद्रक्षयेद्राजा यावद्द्वादशवत्सरम् ॥ ८३ ॥

चेद्यदि भ्रातृपुत्रोऽपि दत्तो भवेत्तदा सर्वेषु कर्मसु पठीतैव तस्य पिता भवेत् उत्पादको जनकस्तु तस्य पितृव्यः स्यात् ॥ ७९ ॥

धनहारिणा पुरुषेण धनस्वामिनो धर्मा नियमाश्च संरक्षणीयास्तद्बान्धवाश्च सन्तोषणीया इत्याह यहत्यादिना । यः पुमान् यस्य पुंसो धनहर्त्ता स्यात् स तस्य धर्माणि पालयेत् तस्य नियमांश्च संरक्षेत् तस्य बन्धूनपि परितोषयेत् ॥ ८० ॥

कानीनगोलकादीनां दायाधिकारित्वं तेषां मरणेऽशौचं च नेत्याह कानीना इत्यादिना । ये कानीनाः पितुर्वेश्मन्यप्रकाशं कन्ययोत्पादिताः ये च गोलका मृते भर्त्तरि जाराज्जाताः ये च कुण्डा जीवत्येव पत्यौ जारजाः ये चोक्तलक्षणा अतिपातकिनस्तेषां मरणेऽशौचं न स्यात् तेषां दायाधिकारिता च नैव स्यात् । अमृते जारजः कुण्डो मृते भर्त्तरि गोलकः इत्यमरः ॥ ८१ ॥

नासाकर्त्तनदण्डकापराधकर्त्रीणां स्त्रीणां लिङ्गच्छेदनदण्डकापराधकारिणां महापातकिनाञ्च पुंसामपि मृतावशौचं नाचरणीयमित्याह लिङ्गच्छेदेत्यादिना । येषां पुरुषाणां लिङ्गच्छेदः शिश्नकर्त्तनं दमो दण्डो विहितस्तेषां यासां नासानिकृन्तनं नासिकाकर्त्तनं दण्डस्तासां स्त्रीणां महापातकिनां ब्रह्मघातकादीनाञ्चापि मृतौ मरणेऽशौचं नाचरेन्न कुर्यात् ॥ ८२ ॥

द्वादशाब्दे गते तेषां दर्भदेहान् विदाहयेत्।
त्रिरात्रान्ते तत्सुताद्यैः प्रेतत्वं परिमोचयेत्॥ ८४॥
ततस्तत् परिवारेभ्यः पुत्रादिक्रमतो धनम्।
विभज्य नृपतिर्दद्यादन्यथा पातकी भवेत्॥ ८५॥
न कोऽपि रक्षिता यस्य दीनस्यापन्नतस्य च।
तस्यैव नृपतिः पाता यतो भूपः प्रजाप्रभुः॥ ८६॥
यद्यागच्छेदनुद्दिष्टो विभागान्तेऽपि कालिके!।

अनुद्दिष्टानां मनुष्याणां परिवारान् धनानि च द्वादशवर्षपर्य्यन्तं राज्ञा रक्षितव्यानीत्याह न्टणामित्यादिना। उद्देशहीनानामनुद्दिष्टानां न्टणां मनुष्याणां परिवारान् यावद् द्वादशवत्सरं द्वादशवर्षपर्य्यन्तं राजा पालयेत्, तेषां धनान्यपि स एव रक्षयेत्॥ ८३॥

द्वादशवर्षादूर्द्ध्वमनुद्दिष्टानां पुंसां कुशमयानि शरीराणि राज्ञा तत्पुत्त्रादिभिर्द्दाहयितव्यानि त्रिरात्रान्ते तेषां प्रेतत्वञ्च मोचयितव्यमित्याह द्वादशाब्द इत्यादिना। द्वादशाब्दे द्वादशवर्षे गते याते सति तेषामुद्देशहीनानां न्टणां दर्भदेहान् कुशशरीराणि राजा तत्सुताद्यैरनुद्दिष्टानां पुत्त्रादिभिर्विदाहयेत्, त्रिरात्रान्ते तेषां प्रेतत्वञ्च तैरेव परिमोचयेत्॥ ८४॥

ततः परमुद्देशरहितजनस्वामिकं द्रव्यं विभज्य पुत्त्रादिक्रमतस्तत्परिवारेभ्यो न्टपतिर्द्दद्यात्। नन्वेवमकुर्वतो नरपतेः को दोषोऽत आह अन्यथेति। अन्यथा एतदकुर्वन्नृपतिः पातकी भवेत्॥ ८५॥

विपत्तिं प्राप्तोऽनन्यरक्षको मर्त्त्यो राज्ञैव पालनीय इत्याह न कोऽपीत्यादिना। आपन्नतस्य विपत्तिं प्राप्तस्य दीनस्य दरिद्रस्य यस्य पुंसः कोऽपि रक्षिता न विद्यते तस्य न्टपतिरेव पाता रक्षकः स्यात्, यतो भूप एव प्रजानां प्रभुः स्वामी भवेत्। निस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि स इत्यमरः॥ ८६॥

तस्यैव दाराः पुत्राश्च धनं तस्यैव नान्यथा ॥ ८७ ॥
न समर्थः पुमान् दातुं पैतृकं स्थावरञ्च यत् ।
स्वजनायाथवान्यस्मै दायादानुमतिं विना ॥ ८८ ॥
यत्तु स्वोपार्ज्जितं रिक्थं स्थावरं स्थावरेतरम् ।
अस्थावरं पैतृकं च स्वेच्छया दातुमर्हति ॥ ८९ ॥
स्थिते पुत्रेऽथवा पत्न्यां कन्यायां तत्सुतेऽपि वा ।
जनके च जनन्यां वा भ्रातर्य्येवं स्वसर्य्यपि ॥ ९० ॥

द्रव्यविभागान्तेऽप्यागतस्यानुद्दिष्टस्यैव पत्न्यादयो भवेयुरित्याह यदीत्यादिना । हे कालिके ! विभागान्तेऽप्यनुद्दिष्टो जनो यद्यागच्छेत् तदा तस्यैव दारा भार्य्यापुत्त्राश्च तस्यैव धनमपि तस्यैव एतत् सर्वमन्यथा न भवेत् ॥ ८७ ॥

अंशिकानामननुमतौ पितृस्वामिकस्थावरद्रव्यं कस्मैचिदपि दातुं न कोऽपि शक्नुयादित्याह न समर्थ इत्यादिना । नगस्थावरं चेत्यत्रावधारणार्थकस्य शब्दः पैतृकस्थावराभ्यां द्वाभ्यामपि सम्बध्यते तदायमर्थः । दायादानुमतिं विना अंशिकानामनुमतेरभावे पैतृकमेव स्थावरमेव यत् द्रव्यं तत् स्वजनायान्यस्मै वा दातुं पुमान् समर्थः शक्तो न भवेत् । अन्वाचयसमाहारेतरेतरसमुच्चये विनियोगे तुल्ययोगितावधारणहेतुषु पादस्य पूर्णेऽप्युक्तं न वस्वर्थेषु चाव्ययम् ॥ ८८ ॥

पैतृकं स्थावरञ्च यदित्यनेन स्वोपार्ज्जितस्थावराद्यखिलद्रव्यस्वलभ्यस्य पैतृकस्य च जङ्गमद्रव्यस्य स्वच्छन्दं दानं कुर्य्यादिति सूचितं, तदेव पुनर्विस्पष्टयितुमाह यत्त्वित्यादिना । यत्तु स्वोपार्जितं स्थावरं स्थावरेतरं जङ्गमं च रिक्थं धनं यच्च लब्धं पैतृकं पितृसम्बन्ध्यस्थावरं जङ्गमं धनं तत्तु स्वेच्छया दातुमर्हति ॥ ८९ ॥

अतिसन्निकृष्टतरपुत्राद्यननुमतावप्यात्मोपार्जितस्थावरादिसकल-द्रव्यं पैतृकञ्चास्थावरधनं दातुं पुमान् समर्थो भवेदित्याह स्थित इत्यादिना—क्षमो भवेदित्यन्तेन श्लोकद्वयेन । पुत्त्रे आत्मजेऽपि स्थिते

स्वार्ज्जितं स्थावरधनमस्थावरधनञ्च यत् ।
अस्थावरं पैतृकञ्च दातुं सर्व्वं क्षमो भवेत् ॥ ८१ ॥
धनमेवं विधानेन दत्तं वा धर्म्मसात्कृतम् ।
पुंसा तदन्यथा कर्त्तुं पुत्राद्यैर्नैव शक्यते ॥ ८२ ॥
धर्म्मार्थं स्थापितं रिक्थं दाता रक्षितुमर्हसि ।
न प्रभुः पुनरादातुं धर्म्मो ह्यस्य यतः प्रभुः ॥ ८३ ॥
मूलं वा तदुपस्वत्वं यथासङ्कल्पमम्बिके ! ।
स्वयं वा तत्प्रतिनिधिर्धर्म्मार्थं विनियोजयेत् ॥ ८४ ॥

सति पत्न्यां भार्य्यायामथवा कन्यायां दुहितरि स्थितायां तत्सुते कन्यापुत्रे वा जनके पितरि वा स्थिते जनन्यां मातरि स्थितायामेव भ्रातरि सोदरे स्थिते स्वसर्य्यपि भगिन्यामपि स्थितायां स्वार्जितमात्मोपार्जितं यत् स्थावरं धनं यच्चास्थावरधनं जङ्गम-द्रव्यं यच्च पैतृकमप्यस्थावरं धनं तत् सर्वं दातुं पुमान् क्षमः समर्थो भवेत् ॥ ८० । ८१ ॥

शङ्करोक्तेन विधानेन पुरुषेण दत्तं धर्मार्थं स्थापितं च द्रव्यं तत् पुत्रादिभिर्नैवान्यथा कर्त्तुं शक्यमित्याह धनमित्यादिना । पुंसा पुरुषेणैवं विधानेन शिवोक्तेनैतादृशेन विधिना यत् धनं दत्तं यद्वा धर्मसात् कृतं धर्माधीनं कृतं धर्मार्थं स्थापितमिति यावत् तत् धनं पुत्राद्यैरन्यथा कर्त्तुं नैव शक्यते ॥ ८२ ॥

धर्मार्थस्थापितद्रव्यस्य धर्मस्वामिकत्वाद्दातुः पुनरग्राह्यत्वं तद्रक्षकत्वञ्चाह धर्मार्थमित्यादिना । धर्मार्थं स्थापितं यद्रिक्थं धनं तद्रक्षितुं दाताऽर्हति तत् धनं पुनरादातुं ग्रहीतुं दाता न प्रभुरधिपः यतोऽस्य धनस्य हीति निश्चितो धर्मः प्रभुः स्वामी ॥ ८३ ॥

मूलधनं तदुपस्वत्वं वात्मनात्मप्रतिनिधिना वा यथासङ्कल्पं धर्मार्थं विनियोजयितव्यमित्याह मूलमित्यादिना । हे अम्बिके ! यथासङ्कल्पं सङ्कल्पमनतिक्रम्य मूलं वा धनं तदुपस्वत्वं वा तत्प्रति-

स्वोपार्ज्जितधनस्यार्द्धं दायादायापि चेत् धनी ।
दद्यात् स्नेहेन तत्रान्यो नान्यथा कर्त्तुमर्हति ॥ ८५ ॥
यदि स्वोपार्ज्जितस्यार्द्धमेकस्मै धनहारिणाम् ।
ददात्यन्यैश्च दायादैः प्रतिरोद्धुं न शक्यते ॥ ८६ ॥
एकेन पितृवित्तेन यच्च वित्तमुपार्ज्जितम् ।
पितरि समांशा दायादा न लाभार्हा विनार्जकम् ॥ ८७ ॥
पैतृकाणि च वित्तानि नष्टेऽप्युद्धारयेत्तु यः ।

निधिरात्मनः प्रतिनिधिर्वा धर्मार्थं विनि-योजयेत् मुख्यस्याभावे तत्सदृशो य उपादीयते स प्रतिनिधिः ॥ ८४ ॥

ननूपार्ज्जकजनेन प्रेमतो दायहारिणेऽपि दत्तं स्वोपार्ज्जितद्रव्यस्यार्द्धमन्यः पुमानन्यथा कर्त्तुमर्हति न वेत्यत आह स्वोपार्ज्जितधनस्येत्यादिना । धनी पुमांश्चेद्यदि स्नेहेन प्रेम्णा स्वोपार्ज्जितधनस्यार्द्धं दायादायापि धनहारिणेऽपि दद्यात्तदान्यो जनस्तत्स्नेहेन स्वोपार्जितधनार्द्धमन्यथा कर्त्तुं नार्हति न योग्यो भवति ; इतोऽनन्तरं वक्ष्यमाणस्य वचनस्य बहुंशिविषयत्वात् द्वंशिविषयकमिदं वचनम् ॥ ८५ ॥

ननु बहूनां दायादानामेकस्मै दीयमानं स्वोपार्ज्जितधनस्यार्द्धमन्ये दायादाः प्रतिरोद्धुं शक्नुवन्ति न वेत्यत आह यदीत्यादिना । यद्यर्जको धनहारिणां दायादानां मध्ये एकस्मै धनहारिणे स्वोपार्जितस्य द्रव्यस्यार्द्धं ददाति तदान्यैर्दायादैः प्रतिरोद्धुं वारयितुं न शक्यते ॥ ८६ ॥

ननु पैतृकद्रविणेनोपार्जिते वित्ते सर्वे दायादा भागार्हा भवेयुर्न वेत्याशङ्कायामाह एकेनेत्यादिना । यत्र येषु दायादेषु मध्ये यनैकेन दायादेन येन पितृवित्तेन पैतृकेण धनेन वित्तं धनमुपार्जितं ते सर्वे दायादास्तस्मिन् पितरि पैतृके वित्ते समांशाः समभागिनः स्युः तमर्जकं विना लाभार्हास्तु न स्युः किन्त्वर्जक एवैको लाभार्ह इत्यर्थः ॥ ८७ ॥

दायादानां तद्धनेभ्य उद्धर्त्ता द्व्यंशमर्हति ॥९८॥
पुण्यं वित्तं च विद्या च नाश्रयेदशरीरिणम्।
शरीरन्तु पितुर्यस्मात् किन्न स्यात् पैतृकं वसु ॥९९॥
पृथगन्नैः पृथग्वित्तैर्मनुजैर्यदुपार्जितम्।
सर्वं तत् पितृसंक्रान्तं तदा स्वोपार्जितं कुतः?॥१००॥
अतो महेशि! स्वायासैर्येन यत् धनमर्जितम्।
स्वोपार्जितं तदेव स्यात् स तत्स्वामी न चापरः॥१०१॥

विनष्टानि पैतृकाणि द्रव्याण्युद्धरतो जनस्य तत्र भागद्वयहा-रित्वमन्येषान्तु समभागित्वमित्याह पैतृकाणीत्यादिना। दायादानां मध्ये यस्तु दायादो नष्टेऽपि नाशेऽपि सति पैतृकाणि वित्तान्युद्धा-रयेत् स उद्धर्त्ता तद्धनेभ्यो द्व्यंशं भागद्वयमर्हति अन्ये तु समभंशं लभन्त इत्यर्थः ॥ ९८ ॥

वपुषः पैतृकत्वेन वपुरुदाश्रितानां विद्यावित्तादीनामपि पैतृक-त्वसत्त्वात् पृथगन्नद्रव्यैरपि मनुष्यैस्तैरेवोपार्जितानां सर्वेषां धनानां पितृसम्बन्धिता न यायात् स्वोपार्जितत्वं न सिद्ध्येदतो निजायासै-रर्जितानां सकलद्रव्याणां स्वोपार्जितत्वमर्जकमात्रस्वामिकत्वञ्च ज्ञातव्य-मित्येतदेवाह पुण्यमित्यादिना न चापरः इत्यन्तेन श्लोकत्रयेण। यस्माद्धेतोः पुण्यं धर्मं वित्तं धनं च विद्या शास्त्रादितत्त्वज्ञानं चाशरीरिणमदेहिनं नाश्रयेन्नावलम्बेत्, किन्तु शरीरिणमेवाश्रयेत् शरीरन्तु पितुः पितृसम्बन्धि भवति। अतः किं वसु धनं पैतृकं पितृसम्बन्धि न भवेदपि तु सर्वं वसु पैतृकमेव स्यात् ॥ ९९ ॥

पृथगन्नैरिति। अतः पृथगन्नैर्विभिन्नभक्तैः पृथग्वित्तैर्विभक्तधनै-रपि मनुजैर्मनुष्यैर्यदुपार्जितं तत्सर्वं पितृसंक्रान्तं पितृसम्बद्धं जातं तदा स्वोपार्जितं धनं कुतो भवेत्, धनस्य स्वोपार्जितत्वं न सिद्ध्येदित्यर्थः ॥ १०० ॥

अत इति। हे महेशि! अतो हेतोः स्वायासैरात्मपरिश्रमैर्येन

मातरं पितरं देवि ! गुरुं चैव पितामहान् ।
मातामहान् करेणापि प्रहरन्नैव दायभाक् ॥ १०२ ॥
निघ्नन्नन्यानपि प्राणैस्तेषां धनमाप्नुयात् ।
हतानामन्यदायादा भवेयुर्धनभागिनः ॥ १०३ ॥
नपुंसकाः पङ्गवश्च ग्रासाच्छादनमम्बिके ! ।
यावज्जीवनमर्हन्ति न ते स्युर्दायभागिनः ॥ १०४ ॥
सस्वामिकं प्राप्तधनं पथि वा यत्र कुत्रचित् ।
नृपस्तत् स्वामिने प्राप्तं दापयेत् सुविचारयन् ॥ १०५ ॥

पृथगन्नादिनाऽपृथगन्नादिना वा पुंसा यत् धनमर्ज्जितं तदेव धनं स्वोपार्जितं स्यात् । सोऽर्जक एव तत्स्वामी स्वोपार्ज्जितस्य धनस्य प्रभुर्न चापरोऽर्ज्जकभिन्नः स्वामी ॥ १०१ ॥

मात्रादीन् पाणिनापि प्रहरतो मानवस्य दायभागित्वं नैव स्यादित्याह मातरमित्यादिना । हे देवि ! मातरं जननीं पितरं जनकं गुरुं मन्त्रोपदेष्टारं बहुवचनस्य बहुपलक्षकत्वात् पितामहान् पितामहादीन् मातामहांश्चापि मातामहादीनपि करेण पाणिनापि प्रहरन्नरो दायभाङ्नैव भवेत् । अपि शब्देन दण्डादिना मात्रादीन् प्रहरतस्तु सुतरामेव दायभागित्वं न भवेदिति सूचितम् ॥ १०२ ॥

भ्रात्रादीनपि धनार्थं मारयतः पुरुषस्य हतस्वामिकद्रव्ये निरंशकत्वमपरदायादानाञ्च समांशकत्वं स्यादित्याह निघ्नन्नित्यादिना । अन्यानपि जनान् प्राणैर्निघ्नन्मारयन्नरस्तेषां हतानां धनं नाप्नुयान्न लभेत किन्तु हतानामन्ये हन्तुर्भिन्ना दायादा धनभागिनो भवेयुः ॥ १०३ ॥

अथाऽनंशानां पङ्गुक्लीवानां यावज्जीवनं ग्रासाच्छादनभागित्वं स्यादित्याह नपुंसका इत्यादिना । हे अम्बिके ! जगज्जननि ! नपुंसका पङ्गवश्च यावज्जीवनं जीवनपर्य्यन्तं केवलं ग्रासाच्छादनमर्हन्ति ते दायभागिनो न स्युः ॥ १०४ ॥

अस्वामिकानां जीवानामस्वामिकधनस्य च।
प्राप्ता तत्र भवेत् स्वामी दशमांशं नृपेऽर्पयेत् ॥ १०६ ॥
स्थावरं धनमन्यस्मै स्थिते सान्निध्यवर्त्तिनि।
योग्ये क्रेतरि विक्रेतुं न शक्तः स्थावराधिपः ॥१०७॥
सान्निध्यवर्त्तिनां ज्ञातिः सवर्णो वा विशिष्यते।
तयोरभावे सुहृदो विक्रेतिच्छा गरीयसी ॥ १०८ ॥

नन्वध्वादौ लब्धस्य सस्वामिकद्रव्यस्य प्राप्तृजनगामित्वं स्यादात्मस्वामिगामित्वं वेत्यत आह सस्वामिकमित्यादिना। पथि मार्गे यत्र कुत्रचिद्वा स्थाने सस्वामिकं प्राप्तं धनं सुविचारयन् प्रस्तत् स्वामिने प्राप्तधनस्यापि पतये प्राप्ता पुंसा दापयेत् ॥ १०५ ॥

नन्वस्वामिकाः प्राप्ता गवाश्वादयो जीवास्तादृशानि प्राप्तानि धनानि च प्राप्तारं पुमांसं गच्छेयुर्वसुधाधिपं वेत्याशङ्कायामाह अस्वामिकानामित्यादिना। अस्वामिकानां स्वामिरहितानां जीवानां गवाश्वादीनामस्वामिकस्य धनस्य च प्राप्ता जनस्तत्र तेषु प्राप्तेषु स्वामी भवेत् तत्र च दशममंशं प्राप्ता नृपेऽर्पयेद्दद्यात्। जीवानामिति धनस्येति च कर्तृकर्मणोः कृतीति कर्मणि षष्ठी ॥ १०६ ॥

ननु स्थावरद्रव्यस्वामिना दूरस्थं योग्यसमीपस्थयोः क्रायकयोर्मध्ये कतरस्मै स्थावरं धनं विक्रेतुं शक्यते तत्राह स्थावरमित्यादिना। सान्निध्यवर्त्तिनि समीपस्थायिनि योग्ये क्रयार्हे क्रेतरि क्रायके स्थिते सत्यन्यस्मै दूरवर्त्तिने पुंसे स्थावरं धनं विक्रेतुं स्थावराधिपो जनः शक्तो न भवेत्, किन्तु सान्निध्यवर्त्तिने एव विक्रेतुं शक्नुयादित्यर्थः। सन्निधिरेव सान्निध्यम्। चतुर्वर्णादीनां स्वार्थे उपसंख्यानमिति स्वार्थे ष्यञ् ॥ १०७ ॥

नन्वनेकेषां सन्निधिवर्त्तिनां मध्ये कतमस्य स्थावरद्रव्यक्रयणे वैशिष्ट्यमत आह सान्निध्येत्यादिना। सान्निध्यवर्त्तिनां मध्ये ज्ञातिर्गोत्रजो विशिष्यते, सवर्णः समानवर्णो वा विशिष्यते, तयोर्ज्ञातिसवर्णयोरभावे सुहृदो मित्राणि विशिष्यन्ते। ननु बहूनां गोत्रजानां

निर्णीतमूल्येऽप्यन्येन स्थावरस्य क्रयोद्यमे ।
तन्मूल्यं चेत् समीपस्थोराति क्रेता न चापरः ॥१०९॥
मूल्यं दातुमशक्तश्चेत् सम्मतो विक्रयेऽपि वा ।
सन्निधिस्थस्तदान्यस्मै गृही शक्तोऽतिविक्रये ॥ ११० ॥
क्रीतं चेत् स्थावरं देवि ! परोक्षे प्रतिवासिनः ।
श्रवणादेव तन्मूल्यं दत्वासौ प्राप्तुमर्हति ॥ १११ ॥

स्ववर्णानां सुहृदाञ्च मध्ये कतमस्मै स्थावरं द्रव्यं तत्स्वामी विक्रीणी-तेत्यत आह विक्रेतुरिच्छेति विक्रेतुर्विक्रयकर्त्तुरिच्छा गरीयसी गुरुतरा भवेत् । क्रमत एव तेषां मध्ये यस्मै विक्रेतुमिच्छेत्तस्मै एव विक्रीणी-तेति भावः ॥ १०८ ।

नन्वन्यनिर्णीतमूल्यं स्थावरं वित्तं तन्मूल्यं ददता समीपस्था-यिना क्रीयेत निर्णीतमूल्येनान्येन ,वेत्याशङ्कायामाह निर्णीतेत्या-दिना । स्थावरस्य वित्तस्य क्रयोद्यमे सत्यन्येन समीपस्थभिन्नेन पुंसा निर्णीतमूल्येऽपि मूल्ये निर्णीतेऽपि सति तन्मूल्यमन्यनिर्णीतमूल्यक-स्थावरद्रव्यमूल्यं चेद्यदि समीपस्थो जनो राति ददाति तदाऽपरः समीपस्थभिन्नो जनः क्रेता क्रायको न भवेत्, किन्तु समीपस्थ एव मूल्यं दत्त्वा क्रीणीयादित्यर्थः ॥ १०९ ॥

स्थावरधनस्य मूल्यं दातुमशक्तुर्वति तद्विक्रये सम्मतिं वापि कुर्वति समीपस्थायिनि जने दूरस्थाय तद्विक्रेतुं तत्स्वामी शक्तोतीत्यत आह मूल्यमित्यादिना । सन्निधिस्थः समीपस्थायी जनश्चेद्यदि स्थाव रस्य मूल्यं दातुमशक्तो भवेत्, तस्य विक्रयेऽपि वा सम्मतः सम्मतिमान् भवेत्, तदा गृही गृहस्थोऽन्यस्मै सन्निधिस्थभिन्नाय विक्रये शक्नोति शक्तो भवति ॥ ११० ॥

ननु समीपस्थायिनः परोक्ष एवान्येन क्रीतं स्थावरं वित्तं क्रेतैव प्राप्तुमर्हति तत् श्रुत्वैव तन्मूल्यं ददत् समीपस्थायी वेत्या-शङ्कायामाह क्रीतञ्चेदित्यादिना । हे देवि ! चेद्यदि प्रतिवासिनः

